# कार्तवीर्य द्वादशनामस्तोत्रम्

कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् ।
तस्य स्मरणमात्रेण गतं नष्टं च लभ्यते ॥ १॥

कार्तवीर्यः खलद्वेषी कृतवीर्यसुतो बली ।
सहस्रबाहुः शत्रुघ्नो रक्तवासा धनुर्धरः ॥ २॥

रक्तगन्धो रक्तमाल्यो राजा स्मर्तुरभीष्टदः ।
द्वादशैतानि नामानि कार्तवीर्यस्य यः पठेत् ॥ ३॥

सम्पदस्तत्र जायन्ते जनस्तत्र वशं गतः ।
आनयत्याशु दूरस्थं क्षेमलाभयुतं प्रियम् ॥ ४॥

कार्तवीर्य महाबाहो सर्वदिष्टविबर्हण ।
सर्वं रक्ष सदा तिष्ठ दुष्टान्नाशय पाहि माम् ॥ ५॥

सहस्रबाहुसशरं महितं
सचापं रक्ताम्बरं रक्तकिरीटकुण्डलम् ।
चोरादि-दुष्टभय-नाशं इष्टदं तं
ध्यायेत् महाबल-विजृम्भित-कार्तवीर्यम् ॥ ६॥

यस्य स्मरणमात्रेण सर्वदुःखक्षयो भवेत् ।
यन्नामानि महावीर्यश्चार्जुनः कृतवीर्यवान् ॥ ७॥

हैहयाधिपतेः स्तोत्रं सहस्रावृत्तिकारितम् ।
वाञ्छितार्थप्रदं नृणां स्वराज्यं सुकृतं यदि ॥ ८॥

॥ इति कार्तवीर्य द्वादशनाम स्तोत्रम् ॥